यथा खादिभूतानि तत्कृतेषु घटादिष्वाविस्तिरोभावादि यात्येवमसावात्माऽप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा ईयते पुनश्च यथाशयं यथोपाध्याविर्भावतिरोभावादिरूपेण प्रतीयते न वस्तुतः । कुतः । एको बहुधा स्वयंज्योतिर्दृश्यत्वेन नित्यो नित्यत्वेनानन्योऽन्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वं प्रपंचनीयम् ॥२४॥२५॥२६॥ सुविस्मिता सती ॥२७॥ समाश्राव्य संबोध्य ॥२८॥२९॥ भूमेर्भारायमाणानां राज्ञामर्थे

खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ॥ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥२५॥ श्रीशुक उवाच ॥ एवं भगवता राजन् वसुदेव उदाहृतः ॥ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥ कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान् ॥ स्मरंती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥ देवक्युवाच ॥ रामरामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥ कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥ ३० ॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवंति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम् ॥ ३२ ॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३ ॥ श्रीशुक उवाच ॥ एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥

तेषां निधनार्थं मे मयि किलावतीर्णौ ॥३०॥ हे आद्य यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणास्तेषां भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति । तं त्वा त्वां गतिं शरणं गताऽस्मि ॥ ३१ ॥ आनिन्यथुरानीतवन्तौ । पितृस्थानाद्यमसदनात् ॥ ३२ ॥ ३३ ॥ ३४ ॥

१ कालेन विध्वस्तं सत्त्वं सत्त्वगुणो येषाम् । विध्वंस्तधर्मसेतूनाम् । २ भागो भजनं तेन । ३ गतिं शरणं गतास्मि । इति विजयध्वजाचार्याः ।

दैत्यराट् बलिः । कथम्भूतौ । विश्वस्यात्मभूतं दैवम् । सान्वयः सपरिकरः ॥ ३५ ॥ सवृन्दः सपरिजनः । कथंभूतौ पादाववनिज्य यदंबु यगोरवनेजनोदकमाब्रह्म ब्रह्माणमभिव्याप्य जगत्पुनत्पवित्रयद्वर्तते तौ ॥ ३६ ॥ ३७ ॥ इंद्रसेनो बलिः । प्रेमविभिन्नया प्रेमार्द्रयाधिया । बिभ्रद्धारयन् ॥ ३८ ॥ अनंताय शेषाय । बृहते फणैकदेशे विश्वधारणाद् बृहत्तस्मै कृष्णाय सदानंदरूपाय च । वेधसे जगद्विधात्रे । सांख्ययो

तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादाववनिज्य तज्जलं सवृंद आब्रह्म पुनद् यदंबु ह ॥ ३६ ॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ तांबूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥ स इंद्रसेनो भगवत्पदांबुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हाऽऽनंदजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥ ३८ ॥ बलिरुवाच ॥ नमोऽनंताय बृहते नमः कृष्णाय वेधसे ॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥ दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ॥ ४१ ॥ विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि[1] ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२ ॥ केचनो द्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३[2] ॥

गवितानायेत्यादिपदत्रयमैक्यविवक्षया ॥ ३९ ॥ योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्याह । दर्शनमिति । दुष्प्रापमपि युष्मत्कृपया केषांचिद्दुर्लभं सुलभमपि भवति तदाह । रजस्तमःस्वभावानामिति । नो दर्शनं प्राप्तौ ॥ ४० ॥ अहो विद्विषो वयं सात्त्विक भक्तेभ्योऽपि सभाग्या इत्याह दैत्येत्यादित्रिभिः ॥ ४१ ॥ ४२ ॥ उद्बद्धवैरेण या भक्तिस्तया । केचनेति चैद्यादयः । कामतो भक्त्या गोप्यादयो

१ शास्त्रं वेदरूपं शरीरं यस्यास्तीति वीरराघवीये । शास्त्ररूपं शरीरमस्य इति महेश्वरः । शास्त्रोक्तं शरीरमस्येति बालबोधिनी । २ द्विचत्वारिंशत्तमपद्यात्प्र इदमधिकं वीरराघवसंमतम् 'प्राप्ताः सालोक्य सामीप्यं सारूप्यमथ सात्मताम् । ते सर्वे भगवन्मुक्तिं भावो हि भवकारणम्' ।

यथा स न्नेकृष्टास्त्वदात्मतां प्राप्ताः तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४३ ॥ ननु सात्त्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रं तदाह । इदमित्थमिति । इदमिति स्वरूपतः इत्थमिति विशेषतश्च ॥ ४४ ॥ तदेवं यद्यपि वैरभावेन त्वत्प्राप्ति र्भवेत्तथाऽपि मां सात्त्विकं कुर्विति प्रार्थयते । तदिति । तत्तथा नः प्रसीद । यथा निरपेक्षैराप्तकामैरपि विमृग्यं युष्मत्पादारविंदं तदेव धिषणमा श्रयस्तस्मादन्यद्गृहं तदेवांधकूपस्तस्मान्निष्क्रम्य निर्गत्य । विश्वस्य शरणं रक्षितारो वृक्षास्तेषामंघ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोहं शांतः सन्नेक एव चरामि । उत अथवा सर्वेषां सखायो महांतस्तैः सह यथा चरामीति ॥ ४५ ॥ कथमल्पपुण्या

इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदंत्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥ तन्नः प्रसीद निरपेक्षवि मृग्ययुष्मत्पादारविन्दधिषणान्यगृहांधकूपात् ॥ निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्वसखैश्च रामि ॥४५॥ शाध्यस्मानीशितव्येश निष्पापान् कुरु नः प्रभो ॥ पुमान् यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६ ॥ श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेंऽतरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४७ ॥ तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४८ ॥

नामेवं भावः संभवतीति चेत्तर्हि यथैतद्भवेत्तथाऽस्माननुशिक्षयेत्याह । शाधीति । हे प्रभो ईशितव्याः सर्वे जीवास्तेषामीश यत्तवानु शासनमातिष्ठन्नाश्रयंश्चोदनाया विधिनिषेधलक्षणायाः सकाशाद्विमुच्यंते । न खलु त्वद्भक्तो विधिकिंकरः स्यादिति भावः ॥ ४६ ॥ तदुक्तं सर्वमनुमोद्य स्वागमनकारणं सप्रपंचं कथयति आसन्निति पंचभिः । ऊर्णायां भार्यायाम् । प्रथमेंऽतरे स्वायंभुवमन्वन्तरे । ते देवाः सुतां वाचं यभितुं यब्धुं मैथुनेन रमयितुमुद्यतमुद्युक्तं कं प्रजापतिं जहसुरुपहसितवन्तः ॥ ४७ ॥ तेनावद्यकर्मणा पापेनासुरीं

१ 'देवलं जहसुर्वीक्ष्य सुतान् शपितुमुद्यतम्' इति पाठान्तरम् । शपितुं शिक्षयितुम् ।

योनिमगन्नगमन् । अधुना तत्क्षणमेव । हिरण्यकशिपोर्जाता इत्यर्थः ॥ ४८ ॥ ते च योगमायया ततो नीताः संतो देवक्या उदरे जाताः । हे राजन् बले ते च कंसेन विहिंसिताः सा च तानात्मजान्मत्वा शोचति । ते चेमे तवांतिकेऽध्यासते ॥ ४९ ॥ लोकं देवलोकम् ॥५०॥ स्मरोद्गीथः स्मरसहित उद्गीथः । सद्गतिं मोक्षम् । स्मरस्यैव पूर्वं कीर्तिमानिति नाम । अतः "कीर्तिमंतं प्रथमजं कंसायानकदुंदुभिः । अर्पयामास" इत्युक्तम्



देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा ताञ्शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽन्तिके ॥ ४९ ॥ इत एता न्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद् विनिर्मुक्ता लोकं यास्यंति विज्वराः ॥ ५० ॥ स्मरोद्गीथः परिष्वंगः पतंगः क्षुद्रभृद् घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यंति सद्गतिम् ॥ ५१ ॥ इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रव र्तते ॥ ५४ ॥ पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥ ते नम स्कृत्य गोविंदं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥ ५६ ॥ तद् दृष्ट्वा देवकी देवी मृता गमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ ५७ ॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनंतवीर्यस्य संत्यनंतानि भारत ॥ ५८ ॥

॥ ५१ ॥ अयच्छतामर्पयामासतुः ॥५२॥५३ ॥ ५४ ॥ अमृतत्वे हेतुः । गदाभृतः पीतशेषमिति नारायणांगसंस्पर्शेन प्रतिलब्धं देवावयमित्यात्म दर्शनं यैस्ते ॥५५॥ धाम देवलोकम् ॥ ५६ ॥ मृतानामागमनं निर्गमनं च श्रीकृष्णस्य मायां मेने । तेनैवापत्यादिरूपेणरचिताम् ॥ ५७ ॥ ५८ ॥



१ इन्द्रसेनेन बलिना ।

अमृतं कीर्तिर्यस्य तस्य । व्यासपुत्रैरिति बहुवचनं पूजार्थम् । जगतामघं भिनत्तीति तथा तत् । अलं निःशेषं यथा भवति तथा दिन कृच्छ्रादिवदिति । तदेवं मोक्षहेतुत्वं पापक्षयहेतुत्वं चोक्तम् । तद्भक्तानां तु सत्कर्णपूरं परमसुखावहं कर्णाभरणमिति स्वयं सुखरूपतामाह । किं च भगवति कृतमावेशितं चित्तं येन स तथा भूत्वा तस्य क्षेमधाम कालादिभयरहितं लोकं यातीति ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधोत्तरार्धे श्रीधरीटीकायां पंचाशीतितमोऽध्यायः ॥ ८५ ॥ षडशीतितमे दंभात्सुभद्रामर्जुनोऽहरत् ॥ गत्वा च मिथिलां

सूत उवाच ॥ य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे मृताग्रजानयनं नाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥ राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो[1] या ममासीत्पितामही ॥ १ ॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमशृणोन्मातुलेयां स आत्मनः[2] ॥ २ ॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥ ॥ ३ ॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः[3] ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥ ४ ॥ एकदा गृहमानीय आतिथ्येन निमंत्र्य तम् ॥ श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥

कृष्णो नृपविप्रानानंदयत् ॥ १ ॥ पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च ॥ जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥ २ ॥ देवक्या मृतपुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसंगात्पृच्छति । ब्रह्मन्निति ॥ १ ॥ २ ॥ कथमशृणोत् दुर्योधनायेति । अपरे वसुदेवादयो न दास्यंतीति । तल्लिप्सुस्तस्या मातुलेय्या लिप्सुः । रामं वंचयितुं पूज्यतमं त्रिदंडिवेषं विधाय गत इत्याह । स यतिरिति ॥ ३ ॥ स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥ तमातिथ्येन निमंत्र्य गृहमानीय बलेन यच्छ्रद्धयोपाहृतं

१ विजयः अर्जुनः । २ आत्मनः मातुलेयीम् मातुलकन्याम् । ३ वार्षिकान्वर्षाकाले भवान् आषाढाद्याश्विनान्तांश्चतुरो मासान् ।

परिविष्टं तद्वीक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥ भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ॥ ६ ॥ व्रीडितापांगी सव्रीडकटाक्षा । तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यया सा ॥ ७ ॥ अंतरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः । कामेन भ्रमच्चित्तं यस्य सः । शं रामादि सन्माननिमित्तं सुखम् ॥ ८ ॥ ९ ॥ आ समंताद्रुंधत आवरणं कुर्वतः ॥ १० ॥ ११ ॥ पारिबर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२ ॥



सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥ सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ॥ हसन्ती व्रीडितापांगी तन्न्यस्तहृदयेक्षणा ॥७॥ तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम्[1] ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूरांश्चाऽऽरुंधतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत् पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद् द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शांतः कविरलंपटः ॥ १३ ॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताऽऽहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥ यात्रा मात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः[2] ॥ १५ ॥ तथा तद्राष्ट्रपालोऽंग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥ तयोः प्रसन्नो भगवान् दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान् प्रययौ प्रभुः ॥ १७ ॥

॥ १३ ॥ अनीहयाऽनुद्यमेनैवागतं यदाहार्यं भोज्यं तेन निर्वर्तिता निजाः क्रिया येन सः ॥ १४ ॥ यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यमुपनमति तं प्रत्यागच्छति ॥ १५ ॥ मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥ प्रभुरेव स्वयं विदेहान्देशान् प्रययौ ॥ १७ ॥



१ दुर्गाद्द्वारकातो बहिर्निर्गताम् । २ अयाचितवृत्तिरित्यर्थः ।

कृष्णो व्यासः रामो भार्गवः । अहं शुकः । एवमादिभिः सह ॥ १८ ॥ १९ ॥ आनर्ताद्यर्णांतास्तद्देशवर्तिन्यो नृनार्यः । उदारहासं स्निग्धमीक्षणं यस्मिंस्तत् । दृशिभिर्नेत्रैः ॥ २० ॥ स्ववीक्षणेनैव विनष्टतमिस्रा दृग्येषां तेभ्यः । क्षेममभयमर्थदृशं तत्त्वज्ञानं च ॥ २१ ॥ अभीयुः

नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्रतत्र तमायांतं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥ आनर्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥ तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन् दिगंतधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृतांजलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥ ॥ २३ ॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ २४ ॥ न्यमंत्रयेतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत् संहतांजली ॥ २५ ॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ॥ उभयोराविशद् गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥ श्रोतुमप्यसतां दूराञ्जनकः स्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥ २७ ॥

प्रत्युज्जग्मुः ॥ २२ ॥ प्रीत्योत्फुल्लान्याननान्याशया अंतःकरणानि च येषां ते । कैः शिरोभिः ॥ २३ ॥ २४ ॥ २५ ॥ तदभिप्रेत्यांगीकृत्य तत्तदोभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं यातीत्यलक्षितोऽविदितः । यद्वा उभाभ्यां रूपाभ्यां तदलक्षितस्ताभ्यामलक्षित इति ॥२६॥२७॥

१ 'लोकाः सूर्यमिवोदितम्' इति पाठान्तरम् । प्रकृते तु ग्रहैः सहोदितं सूर्यमिवेत्यर्थः । २ 'अर्थदृशं प्रयच्छन्' इति वीरराघवसंमतपाठः अपांगदृष्ट्याऽवलोकयन्नित्यर्थः ।

उद्धर्षमुद्गतहर्षं हृदयं यस्य अस्रैराविले क्लिन्ने ईक्षणे यस्य सः स च स च ॥ २८ ॥ ईश्वरान् ईश्वरं तत्तुल्यांश्चेत्यर्थः ॥ २९ ॥ प्रीणन्प्रीणयन् । संस्पृशन्संमर्दयन् ॥३०॥ आत्मा चेतयिता । साक्षी प्रकाशकः । स्वदृक् स्वप्रकाशः । अथातः कारणात् ॥३१॥ अनंतो बंधुरपि श्रीर्भार्याऽपि

प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ नत्वा तदंघ्रीन् प्रक्षाल्य तदपो लोकपावनीः ॥२८॥ सकुटुंबो वहन् मूर्ध्ना पूजयांचक्र ईश्वरान् ॥ गंधमाल्यांबराकल्पधूपदीपार्घगोवृषैः ॥ २९ ॥ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौ विष्णोः संस्पृशन् शनकैर्मुदा ॥ ३० ॥ राजोवाच ॥ भवान् हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ॥ अथ नस्त्वत्पदांभोजं स्मरतां दर्शनं गतः ॥३१॥ स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ॥ यदात्थैकांतभक्तान्मे नानंतः श्रीरजः प्रियः ॥ ३२ ॥ को नु त्वच्चरणांभोजमेवंविद् विसृजेत् पुमान् ॥ निष्किंचनानां शांतानां मुनीनां यस्त्वमात्मद ॥३३॥ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छांत्यै त्रैलोक्यवृजिनापहम् ॥ ३४ ॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ नारायणाय ऋषये सुशांतं तप ईयुषे ॥ ३५॥ दिनानि कतिचिद् भूमन् गृहान् नो निवस द्विजैः ॥ समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥ ३६ ॥ इत्युपामंत्रितो राज्ञा भगवाँल्लोकभावनः ॥ उवास कुर्वन् कल्याणं मिथिलानरयोषिताम् ॥ ३७ ॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान् जनको यथा ॥ नत्वा मुनीन् सुसंहृष्टो धुन्वन् वासो ननर्त ह ॥ ३८ ॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः[1] ॥ स्वागतेनाभिनंद्यांघ्रीन् सभार्योऽवनिजे मुदा ॥ ॥३९॥ तदंभसा महाभाग आत्मानं सगृहान्वयम् ॥ स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृतांबुभिर्मृदा सुरभ्या तुलसीकुशांबुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनांधसा ॥ ४१ ॥

अजः पुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छांत्यै संसारोपशमाय ॥ ३४ ॥ ३५ ॥ गृहान् गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन्परिभ्रमयन् ॥ ३८ ॥ अवनिजे अवनिनिजे प्रक्षालितवान् ॥ ३९ ॥ ४० ॥ फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः ।

[1] तृणपीठे सशिष्यांस्तानास्तृतेषूपवेश्य सः इति पाठान्तरम् ।

सुरभ्या मृदा कस्तूरीप्रमुखया । सपर्यया पूजया । यथोपपन्नयाऽनायासेन संपन्नया । भूतानुपद्रवलब्धत्वात् । सत्त्वविवर्धनं यदंधोऽन्नं तेन च ॥४१॥ अस्य श्रीकृष्णस्यात्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः स मम कुतोऽन्वभूदिति । अनु इति विस्मये । यद्वा आ इति वितर्के नु इति विस्मये ॥ ४२ ॥ उपस्थितः समीप उपविष्टः । भार्या भर्तृव्याः स्वजना अपत्यानि च तैः सहितः । श्रीकृष्णस्यांघ्रिमभिमृशति संमर्दयतीत्यंघ्र्यभिमर्शनः ॥ ४३ ॥ यर्हीदं प्रविष्टस्तदेव दर्शनं प्राप्त इति स एव सन्मात्रो नायतनीभूतस्त्वमित्यर्थः । यद्वा नोऽस्मानद्यैव प्राप्त इति न किंतु तदेव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वम् । त्वद

स तर्कयामास कुतो ममान्वभूद् गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥ सूपविष्टान् कृतातिथ्यान् श्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचांघ्र्यभिमर्शनः ॥ ४३ ॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवंदताम् ॥ नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिर ग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥ ४७ ॥

र्शनं तु परं केवलम्मद्यैव प्राप्तम् ॥ ४४ ॥ मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टांततयाह । यथेति । आत्ममायया स्वाविद्यया । यद्वा आत्मनस्तव माययेति ॥ ४५ ॥ किंच । शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि । मम तु लोचनगोचरस्त्वमहो भाग्यमिति भावः ॥ ४६ ॥ ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भासि मेवैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह । हृद्रिस्थोऽपीति । कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यो व्यवहितोऽप्युपेतगुणः प्राप्त

१ 'सोद्य नो दर्शनं प्राप्तः' 'अद्य नो दर्शनं प्राप्तः' इति विजयध्वजवीरराघवसंमतं पाठान्तरम् ।

श्रवणकीर्तनादिसंस्कार आत्मा अंतःकरणं येषां तेषामंति समीपे । अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥ एतदेव प्रपंचयन्नमस्यति । नमोस्त्विति । ते तुभ्यं नमोऽस्तु अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परात्मने परात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः । अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् । स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन तस्मै । कुत एतत्तत्राह । सकारणं महदादि कार्यमकारणं प्रकृतिस्तदुभयलिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते । अत उभयनियंतुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः । नियंतृनियम्यत्वे कारणं वदन्नाह । हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियंत्रे तुभ्यं नमः । किं च रुद्धदृष्टये मायावित्वा

नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिंगमीयुषे स्वमाययाऽसंवृतरुद्धदृष्टये ॥ ४८ ॥ स त्वं शाधि स्वभृत्यान् नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्षिगोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥ श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंति मया लोकान्पुनंतः पादरेणुभिः ॥ ५१ ॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनंति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥ ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥५३॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥

देवान्येषां रुद्धा आवृता दृष्टिर्येन तस्मै । यद्वा स्वमायया स्वस्यासंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥ स एवंभूतः परमेश्वरस्त्वं नोऽस्मान्स्वभृत्यान् शाध्यनुशिक्षय ॥ ४९ ॥ ५० ॥ स्वस्मिन्नादरमत्यधिकं ब्राह्मणेषु मंदमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति ब्रह्मन्निति सप्तभिः । मया हृदिस्थितेन ॥ ५१ ॥ देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह देवा इति । ते शनैः पुनंति एते तु सद्यः । किं च देवादीनि यत्पुनंति तदप्यर्हत्तमानामीक्षया ॥ ५२ ॥ मम कला परिकलनमुपास्तिस्तया युतः ॥ ५३ ॥ किं च ब्राह्मणाराधनमेव मम प्रेष्ठमित्याह । नेति । हेतुमाह । सर्ववेदमयो विप्र इति । प्रमाणाधीनत्वात्प्रमेयस्य वेदमयो विप्रो

देवमयादस्माद्रूपात्प्रेष्ठ इत्यर्थः ॥ ५४ ॥ असूयवो दोषदृष्टयः । इज्यदृष्टयः पूज्यबुद्धयः ॥ ५५ ॥ अस्य विश्वस्य हेतवो भावा महदादयः । मदीक्षया ममैव सर्वत्रेक्षया ॥ ५६ ॥ ५७ ॥ ५८ ॥ सतां वेदानां त्रिकांडविषयाणां प्रवृत्तिप्रकारमादिश्य ॥ ५९ ॥ इति श्रीमद्भागवते म० दशमस्कंधोत्तरार्धे श्री० टीकायां षडशीतितमोऽध्यायः ॥ ८६ ॥ सप्ताशीतितमे नारायणनारदवादतः ॥ वेदैः स्तुतिर्गुणालंबा निर्गुणावधिवर्ण्यते ॥ १ ॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥ संप्रदायविशुद्ध्यर्थं स्वीयनिर्बंधयंत्रितः ॥

दुष्प्रज्ञा अविदित्वैवमवजानंत्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याऽऽधत्ते विप्रो मदीक्षया ॥ ५६ ॥ तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन्मच्छ्रद्धया ऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान् द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कंधोत्तरार्द्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥ परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरंति श्रुतयः साक्षात् सदसतः परे ॥ १ ॥

श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥ ३ ॥ श्रीमद्भागवतं पूर्वैः सारतः सन्निषेवितम् ॥ मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते ॥ ४ ॥ पूर्वाध्यायांते, "एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् । उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्" इत्यत्र सन्मार्गं सतां स्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति । ब्रह्मन्निति ।

१ स ब्राह्मणः । २ 'मैथिलश्चापतुर्गतिम्' इति पाठान्तरम् ।

तत्र तावन्मुख्या लक्षणा गुणभेदेन त्रिधा शब्दप्रवृत्तिः । मुख्याऽपि रूढियोगभेदेन द्विधा । रूढिश्च स्वरूपेण जात्या गुणेन वा निर्दिशाईं वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्तते । यथा डित्थो गौः शुक्ल इति । लक्षणा च तेनैव संकेतेनाभिहितार्थसंबंधिनि । यथा गंगायां घोष इति । गौणी चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे । यथा सिंहो देवदत्त इति । यथाऽऽहुः । "अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति । योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन । यथा पंकजमौपगवः पाचक इत्यादि ।

**श्रीशुक उवाच ॥ बुद्धींद्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ॥ मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥**

तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न संभवतीत्याह । साक्षात्कथं चरंतीति । तत्र हेतुः । अनिर्देश्ये । अनिर्देश्यत्वेऽपि हेतुं वदन्गुणवृत्तिं निराकरोति । निर्गुणे गुणवृत्तय इति । गुणैर्वर्तमानाऽपि निर्गुणे कथं चरंतीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति । सदसतः पर इति । कार्यकारणाभ्यां परस्मिन्नसंगे केनचिदपि संबंधाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च वा वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥ उत्तरमाह । बुद्धींद्रियेति । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरी

---

१ गुणशब्दप्रवृत्तिर्गौणीत्यभिधीयते । २ शब्दप्रवृत्तिर्बोधनानुकूलव्यापारः । ३ रूढिस्त्रिविधा स्वरूपरूढिर्नाम संज्ञारूढिः जातिरूढिः गौणीरूढिश्च । क्रमेणोदाहरणानि डित्थो गौः शुक्ल इति संज्ञाशब्दस्तु कस्यचित्पिंडमात्रस्यैव वाचको भवति । जातिरूढिर्द्वितीया तत्रोदाहरणं गौरिति सास्नावती गौरिति जातिविशिष्टस्य वाचकत्वात् गोपदस्य गौणीरूढिस्तृतीया तत्रोदाहरणं शुक्ल इति शुक्लगुणविशिष्टः पट इत्यर्थः । शक्यसंबंधो लक्षणा तत्रोदाहरणं गंगायां घोष इति । अत्र गंगापदेन प्रवाहसंबंधि तीरं लक्ष्यते प्रवाहस्य घोषाधारानुपपत्तेः । तृतीयामाह गौणीति । अत्रोदाहरणं सिंहो देवदत्त इति । उभयत्र प्रमाणमाह यथाहुरिति । अभिधेयं गंगादिपदवाच्यं प्रवाहादिं तेनाविनाभूते नित्यसंबंधे तीरादौ गंगादिपदस्य या प्रवृत्तिः सा लक्षणा इष्यते कथ्यते इत्यर्थः । सिंहादिरूपे अभिधेये लक्ष्यमाणा ये शौर्यादिगुणाः तैर्योगात् संबंधात् या प्रवृत्तिः तस्या गौणता इष्टा सा गौणीवृत्तिरित्यर्थः । मुख्यां द्वितीयां योगवृत्तिमाह । योगवृत्तिस्त्विति । योगवृत्तिश्चतुर्विधा रूढियोगः लक्षणायोगः गौणीयोगः प्रकृतिप्रत्ययार्थयोगः । तदेवाह एतत्त्रिविधेति । रूढिप्रतिपादितपदार्थयोः योगेनाद्यः तत्रोदाहरणं पंकजमिति । पंकाज्जातं पंकजम् । इत्यनेन पंकजपदं तामरसे योगिकम् । द्वितीये यथा नीलरक्तो घट इति । न्यायमते नीलादिपदानां द्रव्ये लाक्षणिकत्वात् नीलश्चासौ रक्तश्चेति कर्मधारयेन योगोक्तेर्लक्षणाबोधितपदार्थयोर्योगेन योगः नीलविशिष्टाभिन्नो रक्तविशिष्टो घट इत्यर्थः । तृतीये यथा सिंहाभिमाणवक इति । सिंहश्चासावभिन्नश्च स चासौ माणवक इत्यर्थः । चतुर्थे उदाहरणम् औपगवः पाचक इति ॥ अत्र प्रकृतिप्रत्ययार्थयोः योगेन योगः उपगोः अपत्यम् औपगवः अत्र उपगुपदं प्रकृतिः अपत्यार्थे अण्प्रत्ययस्तद्धितः पचतीति पाचक इत्यत्र पचिधातोः कृत्प्रत्ययो ण्वुल् इत्यादिपदार्थः । आसां कापि वृत्तिर्ब्रह्मणि न संभवतीत्याह । तत्र तावदिति । ब्रह्मप्रमाणं वेदस्तस्य तत्र प्रवेशाभावात्कथं ब्रह्मज्ञानसिद्धिः इति राज्ञः प्रश्नः ॥ १ ॥ क्रोड० ।

श्वरोऽसृजत् । मीयंत इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म । तत्प्रभृतिकर्मकरणार्थमित्यर्थः । आत्मने लोकांतरगामिने आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय कल्पनानिवृत्तये मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति । अयमभि प्रायः । सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानंदं भग वंतं श्रुतयः प्रतिपादयंति । "यः सर्वज्ञः सर्ववित् । यस्य ज्ञानमयं तपः । सर्वस्य वशी सर्वस्येशानः । यः पृथिव्यां तिष्ठन्पृथिव्या आंतरः । सोऽकामयंत बहु स्यांम् । स ऐक्षत तत्तेजोऽसृजत् । सत्यं ज्ञानमनंतं ब्रह्म" इत्याद्याः । तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्व मसीत्यादिवाक्यानि बोधयंति । तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । तच्च प्रकारांतरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति । तथाहि । न तावद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् । यथोक्तम् । "आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ॥

**सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥**

आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्" इति । कुतः । भिन्नार्थत्वात् न । चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पल मितिवत् । यथोक्तम् । "स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्" इत्यादि । कुतः । विरुद्धार्थत्वेन तदयोगात् । न च जहत्स्वार्थत्वेन संबं धिलक्षणया कुसुमितद्रुमा गंगेतिवत् । कुतः । एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागे नानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम् । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगान्निर्गुण एव पर्यवसानम् । तथा चात्रैवोपक्रमे स्वसृष्टमिदमापीयेत्यादिना विशिष्टमालंबनं वक्ष्यति । अंते च "श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्नि धनाः" इत्युपसंहरिष्यंति । उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्ट्याद्यवलंबनेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥ २ ॥ अत्र चानादि

---

१ विश्वेदेवस्तुतिपरायाः ऋगादेरपि वैश्वदेवीपदार्थत्वसंभवात्कथमामिक्षामात्रार्थकत्वम् इत्याशंकायामाह यथोक्तमिति । एष देवतार्थस्तद्धितोऽण् प्रत्ययः विश्वेदेवदेवतायुक्तामामिक्षां वदति आमिक्षापदसान्निध्येन तस्यैव तद्धितस्यैव सामान्यतो द्रव्यवाचकस्य विशेषतो विषयार्पणं भवति । तेन तप्ते दुग्धे दधिमिश्रणे यत्कठिनं द्रव्यं संपद्यते तदामिक्षापदवाच्यम् । तेन विश्वेदेवदेवताको यागो विधेयः । यद्द्रव द्रव्यं तद्वाजिनं तेन वाजिदेवताको याग इति श्रुतेरर्थः सिद्ध्यति स एव विधित्सितः । २ स्वबुद्ध्येति एतत्पूर्वार्धस्तु 'स्वरूपसत्त्वमात्रेण नहि किंचिद्विशेषणम्' इति । अर्थस्त्वेवम् । स्वाकारज्ञानेन विशेष्यमनव भास्यम् । किंचिदपि वस्तु स्वरूपसत्त्वमात्रेण स्वस्थितिमात्रेण विशेषणं न हि भवति किंतु येन नीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेष्यमुत्पलादि रज्यते भास्यते इतरस्माद्व्यावर्तते तद्विशेषणमिति ।

शिष्टपरंपरागतत्वान्न संदेहो युक्त इत्याह । सैषेति । सैषा यथोक्तालंबना ब्राह्मी ब्रह्मपरा । श्रद्धया आदरेण वैतंडिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत्सः अकिंचनो निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥३॥ एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपंचयितुमितिहासमवतारयति । अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम् । गाथामितिहासम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वंति तत्कर्मसत्रं प्रसिद्धम् । तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसते तद्ब्रह्म

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवान्नृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥ श्रीभगवानुवाच ॥ स्वायंभुवं ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां[1] मुनीनामूर्ध्वरेतसाम् ॥९॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र हायमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥ सनन्दन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥ तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम् ॥ १२ ॥

सत्रम् ॥ ९ ॥ अहो तर्हि मया कथं तन्न ज्ञातमित्यत आह । श्वेतद्वीपमिति । तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥ १० ॥ ननु सर्वज्ञास्ते कस्तत्र वक्ता प्रष्टा वा तत्राह । तुल्यश्रुतेति । श्रुतादिभिरविशेषा अरिमित्रोदासीनहीनत्वेन निरुपमकरुणा अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११ ॥ स्वसृष्टमिति । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्रा

१ मानसानां ब्रह्ममानसपुत्राणाम् ।

णमिव वर्तमानं तदंते प्रलयांते तल्लिंगैस्तत्प्रतिपादकैर्वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिश्वासभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥ सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः ॥ १३ ॥ जयजयेति। भो अजित जयजय उत्कर्षमाविष्कुरु । आदरे वीप्सा । केन व्यापारेण। अगजगदोकसाम् अगानि स्थावराणि जगंति जंगमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय । किमिति गुणवती हंतव्येत्यत आह। दोषगृभीतगुणां दोषायानंदाद्यावरणाय गृहीता गुणा यया ताम् । हृग्रहोर्भश्छंदसीति भकारः । इयं हि स्वैरिणीव परप्रतारणाय गुणान् गृह्णात्यतो हंतव्येति । तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह। त्वमिति । यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि ।वशीकृतमायत्वादिति भावः । ननु स्वयमेते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह ।

यथा शयानं सम्राजं वंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः ॥ १३ ॥ श्रुतय ऊचुः ॥
जयंजय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥ १ ॥ १४ ॥

अखिलशक्त्यवबोधकेति । तेषां त्वमेवांतर्यामी सर्वशक्त्युद्बोधकः । अतो न ते ज्ञानादौ स्वतंत्रा इति भावः । नन्वहमकुंठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहंतेत्यत्र किं प्रमाणमिति चेदहमेव प्रमाणमित्याह । निगमो वेदः । नन्वेवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह । क्वचिदिति । कदाचित्सृष्ट्यादिसमयेऽजया मायया चरतः क्रीडतो नित्यं चालुप्तभगंतया सत्यज्ञानानंतानंदैकरसेनात्मना च चरतो वर्तमानस्य निगमोऽनुचरेत्प्रतिपादयेत् । कर्मणि षष्ठ्यौ । "यतो वा इमानि भूतानि जायंते ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ य आत्मनि तिष्ठन् ॥ सत्यं ज्ञानमनंतं ब्रह्म ॥ यः सर्वज्ञः सर्ववित्" इत्यादिनिगमकदंबस्त्वामेवंभूतं प्रतिपादयतीत्यर्थः ॥ जयजयाजित जह्यगजंगमावृतिमजामुपनीतमृषागुणाम् ॥ न हि भवंतमृते प्रभवंत्यमी निगमगीतगुणा

१ गृभ्णामि ते सौभगत्वाय हस्तम् । इमामगृभ्णन्मघवञ्जनस्य इति श्रुत्युदाहरणानि । २ जयजयेति नर्कुटकं छन्दः । ३ यतो वा इत्यारभ्य शरणमहं प्रपद्ये इत्यादिवाक्यानि अजया चरत इत्यस्य उदाहरणानि । य आत्मनि तिष्ठन्नित्यखिलशक्त्यवबोधकेत्यस्य । सत्यं ज्ञानमनन्तमित्यात्मना चरत इत्यस्योदाहरणम् ।

र्णवता तव ॥ १ ॥ १४ ॥ ननु कथं मामेवं प्रतिपादयंति यतः "इंद्रो यातोऽवसितस्य राजा" इत्यादिभिः इंद्रो यातो जंगमस्यावरितस्य स्थावरस्य च राजेति प्रतिपाद्यते तथा "अग्निर्मूर्धादिव" इत्यादिभिश्चैवंभूतत्वेनाग्न्यादयः प्र तिपाद्यं तत्राह । बृहदुपलब्धमेतदिति । अयमर्थः । एतदुपलब्धं दृष्टमिंद्रादि सर्वं बृहद्ब्रह्म त्वमित्येवावयंति जानंति । कथम् । बृहत् एवावशेषतयाऽवशिष्यमाणत्वेन । कुतः । यतो बृहतः सर्वस्यो दयास्तमयावुत्पत्तिलयौ सर्वोपादानत्वात् तर्हि किं विकारित्वं बृहतः न । अविकृतात् । विवर्ताधिष्ठानत्वेनाविकार दित्यर्थः । वाशब्द उपमार्थः । यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् । "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ सर्वं खल्विदं ब्रह्म" इत्यादिभिस्तथा प्रतिपादनादित्यर्थः । अतः कारणादृषयो मंत्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च

**बृहदुपलब्धमेतदवयंत्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ॥ अत ऋषयो दधुस्त्वयि मनो वचनाचरितं कथमयथा भवंति भुवि दत्तपदानि नृणाम् ॥ २ ॥ १५ ॥ इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्ष पणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ॥ किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजंति ये पदमज स्रसुखानुभवम् ॥ ३ ॥ १६ ॥**

धृतवंतः । न पृथग्विकारेष्वित्यर्थः । अत्र निदर्शनं कथमयथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवं त्यदत्तानि भवंति । अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरंति । तथा यत्किमपि विकारजातं वदंतो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयंतीत्यर्थः । द्रुहिणवह्निरवींद्रमुखामरं जगदिदं न भवेत्पृथगुत्थितम् ॥ बहुमुखैरपि मंत्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥ १५ ॥ त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति । इति तवेति । त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भोः त्र्यधिपते त्रिगुणमायामृगीनर्तक सूरयो विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धि सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिंधुमवगाह्य निषेव्य तपांसि तपंतीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवंतः । त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं ये पुनः स्वधाम

१ अधिष्ठानज्ञाननाश्योऽन्यथाभावो विवर्तः । अवस्थान्तरभानं वा रज्जुसर्पवत् । ब्रह्मण्यध्यस्तं जगत्कल्पितस्याधिष्ठानत्वेनाविकारादित्यर्थः ।

विधुताशयकालगुणाः । स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अंतःकरणधर्मा रागादयः कालगुणा जरादयश्च येस्ते तथा हे परम तवाजस्रसुखानुभवमखंडानंदानुभवं पदं स्वरूपं भजंति सेवंते तथाभूता दुःखानि त्यजंतीति । "तद्यथा पुष्करपलाश आपो न श्लिष्यंते एवमेवंविदि पापं कर्म न श्लिष्यते ॥ न कर्मणा लिप्यते पापकेन । तत्सुकृतदुष्कृते विधुनुते ॥ एत ँह वाव न तपति ॥ किमहँ साधु नाकरवम् । किमहं पापमकरवम्" ॥ इत्यादिश्रुतेरित्यर्थः ॥ सकलवेदगणेरितसद्गुणस्त्वमिति सर्वमनीषिजना रताः ॥ त्वयि सुभद्र गुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥ ३ ॥ १६ ॥ "असूर्या नाम ते लोका अंधेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः" तथा । "न चेदवेदीन्महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयंति" इत्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निंदंति । दृतय इवेति । असुभृतो नरा यदि ते अनुविधा अनु विदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् । तर्हि श्वसंति जीवंति सफलजीवना भवंति ।

> दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा महदहमादयोंऽडमसृजन् यदनुग्रहतः ॥
> पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ ४ ॥ १७ ॥

इतरथा दृतय इव भस्त्रा इव । वृथाश्वासा इत्यर्थः । नन्वभक्तानामपि कामादिफलमस्त्येव न कार्यकारणानुग्राहकत्वेन जीवनहेतोः तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह । महदहमादय इति । महानहंकारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः संतोऽडं देहं समष्टिव्यष्टिरूपं सृष्टवंतः । तत्र च पंचापि कोशानन्नमयादीन्[1]आविश्य तत्तदाकारः सन्यश्चेतयते स त्वं तदाह । पुरुषविध इति । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । ननु चिदेकरसस्य कथं तत्तदाकारताऽत आह । अन्वयोऽत्रेति । अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसंगत्वं च कथं तत्राह । चरमोऽन्नमयादिषु य इति अन्नमयादिषूपदिश्यमानेषु यश्चरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति संबंधः । ननु तथाप्यन्नमयादिष्वन्वितत्वेऽसंगत्वव्याहतिरेव तत्राह । सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् । अवशेषमवशिष्यत इत्यवशेषमबाध्यम् । अथात एव ऋतं सत्यम् । तर्हि किमर्थं

---

१ अन्नमयादीनन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान् ।

तेष्वन्वय उक्तः। शाखाचंद्रवच्छुद्धस्वरूपलक्षणार्थम्। तथाहि। "स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः" इत्यादिना स्थूलसूक्ष्मक्रमेण पंचकोशानुपदिश्य "तस्य पुरुषविधतामन्वयं पुरुषविध" इति पुनःपुनस्तदन्वितत्वेनालक्ष्य "ब्रह्मपुच्छं प्रतिष्ठा" इति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम्॥ नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः॥ नरहरे न भजंति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः॥ ४॥ ॥ १७॥ एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीयमुक्त्वाऽभक्तनिंदया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावद् "उपाध्यालंबनमुपासनमुदरं ब्रह्म इति शार्कराक्षा उपासते। हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैवैता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत" इत्याद्याः श्रुतयो विदधतीत्याह। उदरमुपासत इति। ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालंबनं मणिपूरकस्थं ब्रह्मोपासते ध्यायंति। शार्कराक्षा[1] इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति कूर्पं शर्करारजो विद्यते दृक्ष्वक्षिषु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत्। उदरस्य हृदया-

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम्॥
तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे॥ ५॥ १९॥

पेक्षया स्थूलत्वात्। यद्वा कूर्पं सूक्ष्मं सूक्ष्मदृश इत्यर्थः। तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः। आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते। हृदय[2]विशेषणं परिसरपद्धतिमिति। परितः सरंति प्रसर्पंतीति परिसरा नाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः। विशेषणस्य फलमाह। तत इति। ततो हृदयात्। भो अनंत तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रत्युदगादुदसर्पत। मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरंध्रं प्रत्युद्गतमित्यर्थः। कथंभूतं धाम। यत्समेत्य प्राप्य पुनरिह कृतांतमुखे मृत्युमुखे संसारे न पतंति। तथा च श्रुतिः। "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका॥ तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति" इति॥ उदरादिषु यः पुंसां चिंतितो मुनिवर्त्मभिः॥ हंति मृत्युभयं देवो हृद्गतं तमुपास्महे॥ ९॥ १८॥

१ शर्कराक्षस्य अपत्यानि शार्कराक्षा ऋषयः। २ हृदयम् उदरादूर्ध्वभूतहृत्कमलस्थं दहराकाशाख्यं ब्रह्मेत्युपासत इत्यर्थः।

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसंबंधे तदनुप्रविष्टस्य च तारतम्ये मति केन विशेषेणोपास्यत्वमितीमामाशंकां परिहरंत्यः "एको देवः सर्व भूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इत्याद्याः श्रुतयः स्तुवंतीत्याह । स्वकृत विचित्रयोनिष्विति ॥ स्वयं कृतासूच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया प्रागेव विद्यमानत्वेन मुख्य प्रवेशासंभवाद्विशन्निव वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे । स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिरनलवत् । अग्नि र्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत् । अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः सममविशेषमतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयंति जानंति । नु इति पृथक्पदं वा । अत्र हेतुः । अभिविपण्यव इति । अभितो विगतव्यवहाराः । पण व्यवहारे इत्यस्य रूपं पण्युरिति । ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मा

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्त्यनलवत स्वकृतानुकृतिः ॥ अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपण्यव एकरसम् ॥६॥१९॥ स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणं तव पुरुषं वदंत्यखिलशक्तिधृतोंशकृतम् ॥ इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेंऽघ्रिमभवं भुवि विश्वसिताः ॥७॥२०॥

त्रमतस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः॥ स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितम् ॥ सर्वानुस्यूतसन्मात्रं भगवंतं भजामहे ॥ ६ ॥ १९ ॥ अपि च कुतो नियमाशंका स्याद्भगवतो देहाद्युपाधिकृतदोषप्रसंग इति यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयंत्यस्तं दोषं निषेधयंति "स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ तत्त्वमसि" इत्याद्याः श्रुतयः । ननु कत्वर्थस्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते न तु तस्येश्वरत्वं बोध्यते । नैतद्युज्यते यतस्तत्र । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्याद्याः श्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदंतीत्याह । स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदंति ।

१ उदरस्थहृदयस्थादितारतम्ये

अंश इवांशः कृत इव कृतः । त्वद्रूपं वदंतीत्यर्थः । ननु कार्यकारणसंवृतस्य कुत एवंभूतत्वं तत्राह । अबहिरंतरसंवरणमिति । बहिः कार्यमंतरं कारणं तत्संवरणं तदावरणम् । वस्तुतस्तदावरणंशून्यम् । तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयोऽन्यथेदं न प्राप्यत इति जानंतो निगमावपनं निगमोक्तकर्मणामावपनमासमंतादुप्यतेऽस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलंति तं भवतोंघ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासा उपासतेऽर्चनवंदनादिभिः सेवंते । भुवी ति मर्त्यलोके इदमेवोचितमिति दर्शयंति ॥ त्वदंशस्य ममेशान त्वन्मायाकृतबंधनम् ॥ त्वदंघ्रिसेवामादिश्य परानंद निवर्तय ॥ ७ ॥ २० ॥ भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति दुरवगमेति । भो ईश्वर दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृत

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषंति केचिदपवगमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ॥ ८ ॥ २१ ॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥ न बत रमंत्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ ९ ॥ २२ ॥**

मूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेव महामृताब्धिस्तस्मिन्परिवर्तो विगाहस्तेन परिश्रमणाः । परिर्वर्जनार्थः । श्रमणं श्रमः गतश्रमा इत्यर्थः । अपवर्गमपि केचिन्न परिलषंति नेच्छंति कुतोऽन्यदिंद्रपदादि । केचिदित्येवंभूता भक्तिरसिका विरला इति दर्शयति न केवलमन्यन्नेच्छंति किं तु तेनैव सुखेन पूर्णाः संतः पूर्वसिद्धं गृहादिसुखमप्युपेक्षंत इत्याह । तव चरणसरोजहंसकुलसंगविसृष्टगृहा इति । तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन संगस्तेन विसृष्टा गृहा यैस्ते तथा । अनेन श्रवणकीर्तने दर्शिते । श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति । यथाह "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च" इति । व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः । "मुक्ता अपि लीलया विग्रहं कृत्वा भजंते" इति ॥ त्वत्कथामृतपाथोधौ विहरंतो महामुदः ॥ कुर्वंति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ ८ ॥ २१ ॥ आराममस्य पश्यंति न तं पश्यति कश्चन् ॥ न तं

१ श्रुत्यर्थस्त्वयम्—आराममुपवनं ग्रामनगरादि विश्वं सर्वे पश्यंति । तमारामनिर्मातारं परमात्मानं कश्चन कोपि न पश्यति ॥ न तमिति । यूयं तं न विदाथ न जानीथ य इमाः प्रजा जजान जनयति स्म । अतो युष्माकं तस्य च अन्यन्महत् व्यवधानं बभूव । यतो भवन्तो नीहारेण अविद्यया प्रावृता अवगुण्ठिता जल्प्याः प्रजल्पनपरास्तार्किका इत्यर्थः । अत एव असुतृपः प्राणतर्पणपरायणाः । उक्थानां शासितारः यज्वानस्ते चरन्ति संसरंतीत्यर्थः ।

विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ॥ नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरंति" इत्याद्याः श्रुतयोऽनुक्रोशंत्यो जगदात्मनी श्वरे रतिमुपदिशंतीत्याह। त्वदनुपथमिति। त्वदनुवर्तित्वात्त्वत्सेवोपयिकमिदं कुलायं कौ पृथिव्यां लीयत इति कुलायं शरीरम्। आत्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति स्वाधीनतया वर्तत इत्यर्थः। तथाऽपि त्वयि उन्मुखे हिते प्रिये आत्मनि च। अप्यर्थे चकारः। एवंभूते सुसेव्ये ऽपि त्वयि बताहो कष्टं न रमंति न सख्यादिना भजंति। असदुपासनया-देहाद्युपलालनेनात्महनः प्रमादिनः। कुतः। यदनुशयाः यस्यामसदुपास नायामनुशयो वासना येषां ते कुशरीरभृतः संत उरुभये संसारे भ्रमंति परिवर्तंते। अत आत्महन इति भावः। त्वय्यात्मनि जगन्नाथे मन्मनो रम तामिह ॥ कदा ममेदृशं जन्म मानुषं संभविष्यति॥९॥२२॥ इदानीम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इत्याद्याः

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥ स्त्रिय उरगेंद्रभोगभुजदंडविषक्त धियो वयमपि ते समाः समदृशोंघ्रिसरोजसुधाः॥ १० ॥ २३ ॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्य मनुदेवगणा उभये ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ ११ ॥ २४ ॥

श्रुतयो ध्यानमंगत्वेनोपदिशंतीत्याह । निभृतमरुन्मनोऽक्षदृढयोगयुज इति । मरुत्प्राणो मनश्चाक्षाणींद्रियाणि च निभृतानि संयमितानि यैस्ते च ते दृढं योगं युंजंति ते दृढयोगयुजस्ते-तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः। स्त्रियोऽपि कामत उरगेंद्र भोगभुजदंडविषक्तधियः अहींद्रदेहसदृशयोर्भुजदंडयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यंत्यो वयं श्रुत्यभिमा निन्यो देवता अपि ते समा एव कृपाविषयतया। अंघ्रिसरोजसुधाः अंघ्रिसरोजं सुष्ठु धारयंत्यः अयं भावः। इत्थंभूतस्तव स्मरणानुभावो ये योगिन स्त्वां ह्याद्यालंबनमुपासते याश्च वयं त्वां समं पश्यामो याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायंति ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति ॥ चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम्॥ यथा कथंचिन्नहरे मम भूयादहर्निशम्॥ १० ॥ २३ ॥ "यतो वाचो निवर्तंते। अप्राप्यमनसा सह ॥ को

अद्धावेद क इह प्रवोचत् ॥ कुत आजाता कुत इयं विसृष्टिः॥ अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥ अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति" इत्याद्याः श्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदंत्यो भक्तिमेवोररीकृत्य स्तुवंतीत्याह । क इह नु वेदेति । बत अहो भगवन्निह जगत्यग्रतः परं पूर्वसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान्को नु पुमान्वेद जानाति । ईश्वरस्य पूर्वसिद्धावन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह । यत उदगादिति । यतस्त्वत्त ऋषिर्ब्रह्मा उत्पन्नो यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाः सर्वे । यदा तु भवान्सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति । यतस्तदा न सत्स्थूलमाकाशादि । न चासत् सूक्ष्मं महदादि । न चोभयं सदसद्भ्यामारब्धं शरीरम् । न

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरंत्युपदिशंति त आरुपितैः ॥
त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥ १२ ॥ २५ ॥

च कालजवस्तन्निमित्तभूतं कालवैषम्यम् । एवं सति तत्र तदा न किमपींद्रियप्राणाद्यपि न च ज्ञापकं शास्त्रमपि । अयमभिप्रायः । अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतांतराणां कालवशेन च मलिनसत्त्वानां न तावद्भगवज्ज्ञानसामर्थ्यम् । तथा च श्रुतिः । "न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव" इत्याद्या । यदा तु प्रलयसमये न बह्वंतरमस्ति तदापि साधनाभावान्न भगवज्ज्ञानसामर्थ्यम् । अतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति ॥ क्वाहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव ॥ दीनबंधो दयासिंधो भक्तिं मे नृहरे दिश ॥ ११ ॥ २४ ॥ इतोऽपि ज्ञानं न सुशकम् उपदिशतामपि भ्रमबाहुल्यादित्याह । जनिमसत इति । असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदंति । असत एव ब्रह्मत्वस्योत्पत्तिं ये च पातंजलादयः । सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदंति ये नैयायिकाः । उतापि ये च

१ अद्धा प्रत्यक्षतः । २ इयं विसृष्टिः आकाशादिसृष्टिः । ३ अस्य विसर्जनेन एतत्सृष्टत्वेन ब्रह्मादिदेवा अपि अर्वाचीना एवेत्यर्थः । 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः । अथो तस्मात् । ४ अनेजदिति । एकमद्वितीयमेजनं कंपनं स्वस्थानाच्च्यवनं तद्रहितमपि मनसो जवीयो वेगवत्तरं विभुत्वादित्यर्थः । एतदात्मतत्त्वं देवा इन्द्रियाणि नाप्नुवन् यतः पूर्वमर्शत् पूर्वमेवागतं सर्वान्तरतया स्थितं न तु पराग्भूतमित्यर्थः । इंद्रियाणि पराग्वस्तुविषयाणि न प्रत्यग्विषयाणीति भावः । तिष्ठन् स्थिरमपि तच्छीघ्रगतिमतोऽन्यानत्येति अतिक्रम्य वर्तते तस्मिन्परमात्मचैतन्ये सति तदाश्रयत्वेन वर्तमानो मातरिश्वा वायुः अपः उदकप्रवाहवत्सततं वर्तमानाः सर्वेषां सर्वचेष्टा दधाति संपादयति । ५ एतच्छ्लोकार्थो द्वाविंशश्लोकटिप्पण्याम् ।

सांख्यादय आत्मनि भिदां भेदं च। ये मीमांसका विपणं कर्मफलव्यवहारमृतं सत्यं स्मरंति वदंति ते सर्वे आरुपितैरारोपितैर्भ्रमैरेवोपदिशंति न तत्त्व दृष्ट्या। "सदेव सोम्येदमग्र आसीत् ॥ ब्रह्मैव सन् ब्रह्माप्येति ॥ अनीशया शोचति मुह्यमानः ॥ अविद्यायामंतरे वर्तमानः ॥ स्वयं धीराः पंडितं मन्यमानाः ॥ जंघन्यमानाः परियंति मूढा अंधेनैव नीयमाना यथांऽधाः ॥ एकमेवाद्वितीयं ब्रह्म ॥ एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत्" इत्यादिश्रुतिविरोधात्। किं च वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं संगच्छेत न तु तदस्तीत्याह। त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति। त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा। उपलक्षणमेतद्विदादि। सा यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृंभिता। तर्हि किमज्ञानमस्ति वस्तुतः पुंसि नैवेत्याह। ततः अबोधात्परत्र परेऽसंगेऽवबोधरसे ज्ञानघने स अबोधो न भवेन्न संभवतीत्यर्थः ॥ मिथ्यातर्कसुकर्कशेरितमहावादांधकारांतरभ्राम्यन्मंदमतेरमंदमहिमंस्त्वज्ज्ञानवर्त्मास्फुटम् ॥

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात सदभिमृशंत्यशेषमिदंमात्मतयात्मविदः ॥
न हि विकृतिं त्यजंति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ १३ ॥ २६ ॥

श्रीमन्माधव वामन त्रिनयन श्रीशंकर श्रीपते गोविंदेति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥ १२ ॥ २५ ॥ ननु यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपंचजातं पुरुषश्च पृथङ्नास्तीत्युक्तं स्यात् कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह। सदिव मन इति मनोमात्रविलसितमिदं त्रिवृत्त्रिगुणात्मकं प्रपंचजातमसदेव सदिव विभाति। कथमिति चेत्तत्राह। त्वयीति। त्वय्यधिष्ठाने। अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः। न केवलमिदंकारास्पदं किंत्वा मनुजात्। मनुजः पुरुषः। अभिविधावाकारः। पुरुषमभिव्याप्येति। पुरुषस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः। तथाच श्रुतिः। "असतोऽधिमनोऽसृजत ॥ मनः प्रजापतिमसृजत ॥ प्रजापतिः प्रजा असृजत ॥ तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंच" इति। नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्स्यादत आह। सदभिमृशंतीति।

---

१ आ मनुजात् 'पञ्चम्यपाङ्परिभिः' आङीप्सदर्थेमिव्याप्तावित्यभिधानम्। २ असतो नामरूपव्याकृतिरहितत्वेन शून्यतुल्यात् ब्रह्मणो निमित्तभूतात् न विद्यते धीर्यस्मात्तदधि मूलाज्ञानम्। मनो महत्त्वाख्या समष्टिबुद्धिरसृजत्। अज्ञानमेव समष्टिमनोरूपेण विवर्तितमभूदित्यर्थः। तच्च मनः प्रजापतिं सत्यलोकवासिनं ब्रह्माणमसृजत। तस्माद्यदिदं परिदृश्यमानं किंचन तदिदं मनस्येव समष्टिबुद्धावेव प्रकर्षेण यथातथा प्रतिष्ठितम्। प्रकर्षेणावस्थितमित्यर्थः।

आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशंति सदिति जानंति। आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि। यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति। नहि विकृतिमिति। कनकस्य विकृतिं कुंडलादिकं कनकार्थिनो न त्यजंति। अत्र हेतुः। तदात्मतया कनकरूपत्वेनेत्यर्थः। अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम् ॥ यत्सत्त्वतः सदाभाति जगदेतदसत्स्वतः ॥ सदाभासमसत्यस्मिन्भगवंतं भजाम तम् ॥ १३ ॥ २६ ॥ ननु "सत्यं ज्ञानमनंतं ब्रह्म ॥ नेह नानाऽस्ति किंचन ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिभिरेवंभूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्या, अत आह। तव परि ये चरंतीति। तवेति कर्मणि षष्ठी। त्वां ये परिचरंति। छंदसि "व्यवहिताश्च" इति यच्छब्देन

**तव परि ये चरंत्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमंत्यविगणय्य शिरो निर्ऋतेः ॥**
**परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥ १४ ॥ २७ ॥**

व्यवधानमदोषः। केन रूपेण अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया। सर्वभूतावासतयेत्यर्थः। उत एव अविगणय्य तिरस्कृत्य त एव निर्ऋतेर्मृत्योः शिरो मूर्धानं पदा पादेनाक्रमंति मृत्योर्मूर्ध्नि पदं दधति। ते तरंति मुच्यंत इत्यर्थः। ये पुनर्विमुखा अभक्तास्तान् गिरा वाचा पशूनिव विबुधान्विदुषोऽपि परिवयसे बध्नासि। कुतः। त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनंति पवित्रयंति आत्मानमन्यानपीति शेषः। नेतरे। तथाच श्रुतिः। "तस्य वाक्तंतिर्नामानि दामानि ॥ तस्येदं वाचा तंत्या नामभिर्दामभिः सर्वं सितम्" इति। अयमभिप्रायः। सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयंति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाऽप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमेव भवतीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थम्। भगव

१ सत्यं कालत्रयाबाधितं ज्ञानं ज्ञप्तिरूपम् अनंतं देशकालवस्तुपरिच्छेदशून्यं ब्रह्म यो वेद स सर्वान् कामानश्नुते इति शेषः। इह ब्रह्मणि किंचन किमपि नानाद्वैतजातं नास्ति मृगजलवन्मिथ्यैव भातीत्यर्थः। यः पुरुषः इह ब्रह्मणि नानेव द्वैतमिव पश्यति स मृत्योरनंतरं मृत्युमाप्नोति संसारं प्राप्नोतीत्यर्थः। इत्यादिश्रुतिभिः ज्ञानं सुलभमेवातो भक्त्या साकारभजनेन कृतमलं प्रयोजनं नास्ति इति वेदांतशास्त्रानभिज्ञानामाशंका तां छिनत्ति। अत आहेति। २ तस्येश्वरस्य वाक् वेदलक्षणा तंतिः दाम्नी नामानि ब्राह्मणादीनि दामानि। यथा तंत्या दामभिर्वृषा बध्यन्ते एवमीशस्य वेदरूपतंत्या नामभिः सर्वं सितं बद्धमित्यर्थः। ३ महावाक्यजं ज्ञानं सुलभमेव तथापि मलिनान्तःकरणानामतिदुर्लभमेवेत्याह। अयमभिप्राय इति। ४ अंतःकरणशुद्धिमंतरा ज्ञानं नोदेति शुद्धिस्तु भक्तिं विना न भवतीति शारीरादिसर्वग्रंथसिद्धांतः। तत्र प्रमाण माह तथेति। उपासकः यत्रकुत्रापि म्रियते तत्र देहांते मरणसमये देवः नृसिंहस्तारकं प्रणवप्रतिपाद्यं परं ब्रह्म व्याचष्टे उपदिशति। एषः परात्मा यं पुरुषं वृणुते अनुगृह्णाति तेन अनुग्रहेणैव लभ्यः प्राप्यो भवति नान्येनेत्यर्थः। यस्येति स्पष्टम्।

